कथमिति चेत् ? तत्तत्कारणैः। तानि तानि च कारणानि च तत्तत्कारणानि-तत्तद्वस्तूनि अनेकभेद-प्रभेदसहितैः प्रमाणनय-निक्षेपानुयोगैः, उपादाननिमित्तभेदरूपैः करणैः कारणैर्वा।

पुनः किं स्वीकुरुते ? बन्धमोक्षौ। बन्धश्च मोक्षश्च बंध-मोक्षौ। बन्धावस्थां मोक्षावस्थां चात्मसात् करोति। कथं ? तत्तत्कारणैः। आस्रवसंवरनिर्जरापूर्वकैः, तत्तत्कारणपूर्वकैश्च। साम्परायिकेर्यापथभेदप्रभेदरूपैः योगस्थानैः मिथ्यादर्शनाविरति-प्रमादकषायरूपैर्भावस्थानैश्च बन्धकारणैः। गुप्तिसमितिधर्मा-नुप्रेक्षापरीषहजयचारित्रैः मोक्षोपायभूतैः संवररूपैः। तपोभेदप्रभे दरूपैःनिर्जरास्थानैश्च

आत्मा पुनः किं स्वीकुरुते ? तयोः फलम्। तयोः बन्ध-मोक्षयोः जायमानं परिणाममवस्थान्तरम् इत्यर्थः कथं ? तत्त-त्कारणैः। अधिगमोपायरूपैरुक्तैः प्रमाणादिभिर्ये गुणधर्मा उक्ता-स्तैस्तैस्तत्तत्फलम्, यानि च बन्धकारणानि उक्तानि तैस्तैस्त-त्तत्फलम् यानि तु मोक्षकारणानि निर्दिष्टानि तैस्तैस्तु तत्तत्फ-मात्मसात् करोति।

अत्र विशेषः—तु परन्तु स्वयमेव स्वाभाव्यात् स्वभावनाति-क्रमेणैवेत्यर्थः। एतेन वस्त्वन्तरपरिणमनकर्तृत्वमीश्वरकर्तृ-त्वादिकं च निषिद्धं भवति॥ ९॥

निश्चयेन सहजसुखरस-स्वादकोऽपि व्यवहारेण कर्मफलभोक्ता भवतीति सूचयति —

द्वि० टीका—हे आत्मन् सहजसुखनिलय परमपदार्थ-त्वं त्वं च इत्याद्यनेकधर्मा कथितोपयोगादि-धर्मस्वरूपो भवसि असि तु पुनः त्वमेव त्वमेव बन्धमोक्षौ प्रकृत्याद्यात्मक-बन्धस्तद्विलक्षणमोक्षस्तयोः तत्-बन्धमोक्षयोः फलं कार्यरूपं। तत्कारणैस्तेषां कारणैः स्वीकुरुषे। स्वयमेवाऽभ्युपगच्छसि। बन्धं मोक्षफलानुभवसामर्थ्याद् बन्ध बन्धफलं परित्यज्य, मोक्ष-मोक्षफले स्वीकुर्यादिति तात्पर्यं ॥९॥

*आत्मा को अनेकधर्मात्मक बतला करके उपसंहार करते हुए अब आत्माकी तात्त्विक व्यवस्था बतलाते हैं—*

अन्वय-अर्थ—( इत्याद्यनेकधर्मत्व ) चेतन, अचेतन, मूर्तिक, अमूर्तिक आदि अनेक धर्मत्वको, ( बन्धमोक्षौ ) कर्म-बन्ध और मोक्ष को ( तु ) और ( तयोः ) उन बन्ध और मोक्षके ( फलम् ) फलको ( तत्तत्कारणैः ) उन उनके कारणों से ( आत्मा )आत्मा ( स्वयमेव ) स्वयं ही ( स्वीकुरुते ) स्वीकार करता है।

भावार्थ—प्रत्येक पदार्थमें अनन्तों धर्म अनुयोगी ( वस्तुभूत,सत्ताभूत ) होते हैं और अनन्तों प्रतियोगी ( असत्तारूप, अभावरूप ) धर्म होते हैं। जब जिस धर्म की विवक्षा ( कथन करने की इच्छा ) होती है तब उन अनुयोगी धर्मोंको विधिरूप ( अस्तिरूप ) से सकारण वर्णन किया जाता है और जब किसी प्रतियोगी धर्म का वर्णन करना आवश्यक होता है तब उस धर्मका निषेध( नास्तित्व )कारण सहित बताया जाता है। इस तरह प्रत्येक पदार्थ अनेक-धर्मात्मक होता है।

कर्मबन्ध, भवभ्रमण भी मिथ्यात्व, अज्ञान, असंयम से आस्रवों बन्ध तत्व के रूप में होता है और सम्यक्त्व, ज्ञान, चारित्र द्वारा संवर निर्जरा की प्रक्रिया से मोक्ष होता है। आत्मा स्वयं विभिन्न कारणों

से वन्ध या मोक्ष की प्रक्रिया किया करता है ॥ ६ ॥

तथा चोक्तम्—

स्वयं कर्म करोत्यात्मा, स्वय तत्फलमश्नुते ।
स्वयं भ्रमति संसारे, स्वयं तस्माद्विमुच्यते ॥*

अत्र स्वरूपव्यवस्था, वन्धमोक्षव्यवस्था, तत्फलभोक्तृत्वव्यवस्था च प्रदर्शिता। एवं च सप्ततत्त्वस्वरूपं संक्षेपेण प्रतिपादितम्। कार्यकारणभवेऽपि स्वातन्त्र्यं—वस्तुस्वभावानतिक्रमणेनैव तथा परिणतिर्भवतीति चोक्तम्। अथवा "स्वयं-तु" इति पदस्य फलेनैव सम्बन्धो याज्यः। आत्मा तयोः फलं तु स्वयमेव भुंक्ते इत्यर्थः। तेन कर्मकर्तृत्वे स्वातन्त्र्यं तत्फलभोक्तृत्वे तु पारतन्त्र्यमात्मनः इति कथनस्यापसिद्धान्तत्वं प्रकटितं भवति।

*अब ग्रन्थकार बतलाते हैं कि जीवको संसारमें भ्रमण कराने वाला, कर्मफल भुगाने वाला और संसार से छुटाने वाला कौन है—*

अन्वय-अर्थ—(आत्मा) संसारी जीव (स्वयं) अपने आप (कर्म) शुभ, अशुभ-कर्म-बन्ध (करोति) करता है। (स्वयं) स्वयं (तत्फलं) उस किये हुए कर्म का फल (अश्नुते) पाता है। (स्वयं) अपने आप (संसारे) मनुष्य, देव, तिर्यंच और नरकगति रूप संसार में (भ्रमति) भ्रमण करता है। (स्वयं) अपने आप (तस्मात्) उस संसारसे (विमुच्यते) छूट जाता है।

---

* मुद्रित पुस्तकमें इस श्लोक पर श्लोक संख्या अंकित नहीं है। तथा अज्ञात नामा द्वितीय संस्कृत टीकाकार ने इस श्लोक की टीका नहीं की है। अतः प्रस्तुत संस्करण में भी इस श्लोक पर कोई संख्या नही दी है।

भावार्थ—यह आत्मा स्वय अपने राग द्वेष मोह आदि भावों के द्वारा ज्ञानावरण, दर्शनावरण, वेदनीय, मोहनीय, आयु , नाम , गोत्र और अन्तराय कर्मों का बन्ध किया करता है और जब कर्म का उदय होता है तो आत्मा स्वयं उसके अच्छे या बुरे फल को भोगा करता है, चारो गतियोंमें जन्म मरण भी यह आत्मा अपने कर्मों के अनुसार किया करता है। तथा निर्ग्रन्थ गुरु द्वारा जिनवाणी सुनकर जब यह शरीर आत्मा का भेदभाव समझकर आत्माका श्रद्धालु बनता है , संसार शरीर और विषय-भोगों से विरक्त होता है, तब यह सम्यग्दृष्टि बनकर स्वयं कर्मोंसे मुक्त होने के मार्ग पर चल पड़ता है। अपनी आत्मचर्या—सम्यक्चारित्र को उन्नत करता हुआ संवर निर्जरा की पद्धति से शुक्लध्यान द्वारा समस्त कर्मोंसे छूटकर, जन्म मरण का सदाके लिये विनाश करके मुक्त भी अपने आप होता है। यानी-यह आत्मा स्वयं कर्ता, भोक्ता, भ्रमणकर्ता और मुक्त होता है

उक्तार्थस्य प्रकारान्तरेण समर्थनपूर्वकं, मुक्तौ हेतुव्यवस्थां प्ररूपयति—

**कर्त्ता यः कर्मणां भोक्ता, तत्फलानां स एव तु ।**
**बहिरन्तरुपायाभ्यां, तेषां मुक्तत्वमेव हि ॥ १०॥**

चन्द्रिका — य आत्मा कर्मणां ज्ञानावरणादीनां कर्त्ता बन्धको भवति तत्फलानामज्ञानादीनां भोक्ता तु अपि स एव । न अन्यः "प्रकृतिस्तु कर्त्री पुरुषस्तु फलभोक्ता" इति सिद्धान्तस्यायुक्तत्वं तु वस्तुस्वरूपविरुद्धत्वात् ।

एवं चेत् कथमात्मा मुक्तः स्यात् । कर्मकर्तृत्वतत्फलभोक्तृत्वयोरनादिपरम्परावदनन्तत्वस्यापि प्रसक्तेः कर्मचेत-

नायाः कर्मफलचेतनायाश्च भिन्नानामुपायान्तराणामभावात् च। इत्यत आह हि यतः स एव आत्मा तेषां-कर्मणां—द्रव्य-कर्मभावकर्मनोकर्मणां तत्कर्तृत्वस्य, तत्फलानां—मोहरागद्वेषाज्ञानादीनां तत्फलभोक्तृत्वविपाकाशयसम्बन्धस्य चेत्येतेषां मुक्तत्वमपि लभते इति शेषः। कथमिति चेत्? बहिरन्तरुपायाभ्याम्। बहिश्चान्तश्च बहिरन्तः तौ च तौ उपायौ चेति ताभ्याम्। बहिरन्तरुपाययोर्ज्ञानरूपत्वेन कर्मचेतना कर्मफलचेतनाया विलक्षणत्वात् निश्चयेनैताभ्यामुपायाभ्याम् आत्मा मुक्तत्वं शुद्धानन्तज्ञानानन्दस्वभावं लभते एवेति तात्पर्यम्।

अन्तरङ्गबहिरङ्गसामग्रीसद्भावात् एव मोक्षो भवतीति कथयति—

द्वि० टीका—( उक्त दोनों श्लोकोंकी )—यो यः कश्चिज्जीवः कर्मणाम् वृजिनानाम् कर्त्ता व्यवहारेण यः करोति स कर्त्ता, तु पुनः। स एव कर्मकर्तैव तत्-फलानां तत्शुभाशुभरूपकर्मफलानां भोक्ता आस्वादकः। बहिरन्तरुपायाभ्यां अन्तरङ्गबहिरङ्गहेतुभ्यां त्वमेव सः, स त्वं तेषां कृतकर्मणां मोक्ता विनाशकः। पातनिकार्थो भावार्थः॥

*उसी बातको और स्पष्ट समझाते हैं—*

अन्वय-अर्थ—( यः ) जो आत्मा ( कर्मणां ) अपने राग द्वेष मोह आदि भावों का तथा उन भावों के द्वारा ज्ञानावरण आदि कर्मों का बन्ध ( कर्ता ) करने वाला है। ( स एव ) वही आत्मा ( तत्फलानां ) उन कर्मोंके शुभ अशुभ फलों का ( भोक्ता ) भोगने वाला है ( तु ) और ( हि ) निश्चय करके ( बहिरन्तरुपायाभ्यां ) बहिरङ्ग

और अन्तरंग उपायों द्वारा ( तेषाम् ) उन कर्मोंका ( मुक्तत्वं एव ) छूट जाना भी उसी आत्मा को होता है।

भावार्थ—जीवको संसार में घुमाने वाला, उसको सुख दुख देने वाला तथा संसार और कर्मों से जीव को मुक्त करने वाला कोई अन्य व्यक्ति नहीं है, यह समस्त कार्य आत्मा स्वयं करता है। यह आत्मा स्वयं अपने मिथ्यात्व, राग द्वेष मोह ममतादि भावों से शरीर परिवार, धन मकान आदि को अपना करके कर्मबन्ध किया करता है तथा कर्मों के उदय आने पर उन कर्मों का फल आत्मा को स्वयं भोगना पड़ता है। आत्मा तथा कर्म, नोकर्म ( शरीर ) का भेद-विज्ञान होजाने पर सम्यक्त्व, सत्ज्ञान स्वयं होता है तथा अन्तरंग बहिरङ्ग तपश्चर्या द्वारा कर्मों से मुक्त भी आत्मा स्वयं होता है।

उसके संसार-भ्रमण तथा संसार छूटने में अन्य कोई सहायक नहीं होता। यह सभी सांसारिक पारमार्थिक आध्यात्मिक कार्य जीव अकेला ही करता है॥ १०॥

को तौ बहिरन्तरुपायौ ? इति प्रश्ने, अन्तरुपायस्य प्राधान्यात् प्रथमं तमेव कलापकेन निर्दिशति—

सद्दृष्टिज्ञानचारित्रमुपायः स्वात्मलब्धये।
तत्वे याथात्म्यसंस्थित्यमात्मनो दर्शनं मतम्॥११॥
यथावद्वस्तुनिर्णीतिः सम्यग्ज्ञानं प्रदीपवत्।
तत्स्वार्थव्यवसायात्म, कथंचित् प्रमितेः पृथक्॥१२॥
दर्शनज्ञानपर्यायेषूत्तरोत्तरभाविषु।
स्थिरमालम्बनं यद्वा, माध्यस्थ्यं सुखदुःखयोः॥१३॥

ज्ञाता दृष्टाऽहमेकोऽहं, सुखे दुःखे न चापरः ।
इतीदं भावनादार्ढ्यं, चारित्रमथवा परम् ॥१४॥

चन्द्रिका—उपायः हेतुरस्ति कस्यै ? स्वात्मलब्धये, स्वस्य आत्मनः स्वरूपं तस्य लब्धिः प्राप्तिः तस्यै, निजस्वरूपसिद्धये । अथवा सु सुष्ठु आत्मा स्वात्मा शुद्धपरमात्मदशापन्न आत्मा । तल्लब्धये परमात्मत्वसिद्धये । किं तत् ? सद्दृष्टिज्ञानचारित्रम् । दृष्टिश्च ज्ञानं च चारित्रं च तेषां समाहारः । सच्च तत् दृष्टिज्ञानचारित्रम् च सद्दृष्टिज्ञानचारित्रम् । सच्छब्दस्य त्रिषु सम्बन्धो बोध्यः । तेन नैकस्य द्वयोर्वा उपायत्वमित्युक्तं भवति समाहारैकत्ववचनात् । न त्रयाणामपि पृथक् २ उपायत्वमित्यपि बोध्यम् । तेन मुक्तेर्मिथ्योपायानां सप्तविधत्वं तत्परिहार्यत्वं च प्रतिपादितम् ।

त्रयाणामपि क्रमेण लक्षणम् कथयति –

मतम् सम्मतम् आचार्याणामिति शेषः । किं तत् ? दर्शनम् । सद्दृष्टिः सम्यग्दर्शनम् । सिद्धत्वोपायेषु प्रथमत्वेन निर्दिष्टो हेतुः सम्यक्त्वमिति यावत् । किं भूतम् ? याथात्म्यसंस्थित्यम् । यथात्मा तस्य भावः याथात्म्यं तत्र संस्थित्यम् सम्यक्तया अवस्थानं । कस्य ? आत्मनः । क ? तत्त्वे, तस्य भावस्तत्त्वं तत्र । योऽर्थो यथावस्थितः तथा तस्य भवने भावेन भाववतोऽप्यभिधानात् अर्थे च । यतः श्रद्धा रुचिः प्रतीतिरेवमादयः समानार्थाः । जीवाजीवाद्यात्मकस्य सप्तविधतत्त्वस्य सर्वज्ञेन

यथास्वरूपं निर्दिष्टं तथैव "इदमेवेदृशमेव तत्त्वं नान्यन्न चान्यथा" इत्याकारेण श्रद्धानं रोचनं प्रत्ययनं वा सम्यग्दर्शनम्। यद्वा आत्मनो ज्ञानिनो जीवस्य तत्त्वे जिनोक्तनिजशुद्धस्वरूपे याथात्म्यसंस्थित्यम् सम्यग्दर्शनं मतम् निश्चयेनेति भावः।

किं सम्यग्ज्ञानम् ? तत् सम्यग्ज्ञानं मतम् किं ? या यथावद्वस्तुनिर्णीतिः यथावत् अव्यभिचारितया संशयादिराहित्येन वा वस्तुनः सतः प्रमेयमात्रस्य वा निर्णीतिः निश्चयः परिच्छेदोऽवबोध इत्यर्थः। कथंभूतं तत्सम्यग्ज्ञानं स्वार्थव्यवसायात्म। स्वश्चार्थश्च स्वार्थौ तयोः व्यवसायः निश्चयः स एव आत्मा स्वरूपं यस्य तत्। तद्धि न केवलं स्वमेव अर्थमेव वा परिच्छिनत्ति इति बोधनफलम् विशेषणम् अन्यथा न्यायशास्त्रोक्तानेकदोषप्रसङ्गः। ननु एकमेव ज्ञानं कथं स्वं परमर्थं च परिच्छिनत्ति ? अतः दृष्टान्तेन समर्थ्यते। प्रदीपवत यथा प्रदीपः स्वं परमार्थं च प्रदीपयति। न तत्र करणान्तरं मृग्यम् तद्वत्, ननु परिच्छेदात्मकं प्रमाणरूपं सम्यग्ज्ञानं करणम्, निर्णीतिस्तु भावसाधनरूपा फलभूता कथमुभयोः सामानाधिकरण्यम् ? एकत्वे तु फलात्मकेन ज्ञानेन पृथक् भाव्यम् अत आह—तत् सम्यग्ज्ञानं प्रमितेः फलभूतायाः अज्ञाननिवृत्त्यात्मिकायाः ज्ञप्तेः कथंचित् पृथक्।

किं चारित्रमत आह—चारित्रं भवति, किं ? स्थिरम् आलम्बनम्। स्वविषयेभ्यो योगस्याप्रच्यवनम् केषु ? दर्शन-

ज्ञानपर्यायेषु सम्यग्दर्शनसम्यग्ज्ञानपरिणमनेषु, कथंभूतेषु ? उत्तरोत्तरभाविषु। क्रमशो यथोत्तरमुत्पद्यमानेषु। उद्योतोनोद्यवनिर्वाहसिद्धिनिस्तरणरूपपरिणामेषु अथवा उपशमनक्षपणविधानगतेषु सम्यग्दर्शनपर्यायेषु, यद्वा आज्ञामार्गादिदशविधसम्यक्त्वेषु तथैवाद्यतादिप्रकारेषु, धर्मध्यानशुक्लध्यानगतश्रुतविकल्पात्मकज्ञानपर्यायेषु च इन्द्रियानिन्द्रियबाह्यविषयव्यावर्तनपूर्वकमैकाग्र्यं तत् चारित्रमित्यर्थः।

यद्वा, — अपरमपि चारित्रं भवति, किं तत् ? सुखदुःखयोः माध्यस्थ्यम्। मोहोदयसहचरितसातासातवेदनीयोदयजन्येष्टानिष्टविकल्पयोः माध्यस्थ्यम् रागद्वेषाभावः साम्यावस्थानम्।

अथवा चारित्रस्यापरमपि लक्षणं भवति, तृतीयमपि प्रकारं भवतीत्यर्थः। किं तत् ? भावनादार्ढ्यम् भावनायाः निर्वर्तनापरिणतेः अभीष्टविषयपरिणमनप्रयोजकत्वसंपृक्तपरिणतेः दार्ढ्यम् दृढत्वम्। ततः कथंभूतं भवतीति "इतोदं" शब्देन स्पष्टीकरोति। तथाहि—

सुखे सातोदयजनितपरिणामे, दुःखे असातवेदनीयोदयसम्भूतपरिणामे, अहम् एकः अद्वितीयः केवलं ज्ञाता द्रष्टा। उपयोगस्वभावत्वान्मम, एतयोः सुखदुःखपरिणामयोस्तु तद्विरुद्धत्वात् केवलमहमेनयोः ज्ञाता द्रष्टैव भवामि, अहमेतयोरपरः कर्त्रादिकारकरूपो न भवामि। निश्चयेन द्रव्यभावस्वभावनि-

भावनादित्यर्थः।

मुक्तिहेतुमाह—

द्वि० टीका—सद्दृष्टिज्ञानचारित्रं सम्यग्दर्शनावबोध-चारित्रं स्वात्मलब्धये आत्म-स्वरूपः-प्राप्तये उपायःमुख्य कारणं भवति। तत्र दर्शनं किंरूपं इत्युक्ते प्राह तत्वे शुद्धात्म-तत्त्वे याथात्म्य सौस्थित्यं अविचलितरुचिः। आत्मनो जीवस्य दर्शनं, सम्यग्दशनं मतं-संमत, निजशुद्धात्मतत्वे रुचिः सम्यग्दशनमिति तात्पर्य।

सम्यग्ज्ञानस्वरूपमाह—

द्वि० टीका—यथावद्वस्तु-निर्णीतिः स्वरूपाऽनत्तिक्रम-वस्तु-परिच्छितिः सम्यग्ज्ञानं भवति तत् सम्यग्ज्ञान प्रदीप-वत् विशदप्रदीपो यथा स्वार्थ-व्यवसायात्मा स्वपरप्रकाशरूपः प्रमितेः ज्ञान-व्यापारात् तत्सकलं ज्ञानं कथंचित्केनापि कारणेन न पृथक् न भिन्नं प्रमाणं स्वकीयफलरूपप्रमितेः सर्वथा भिन्नं न भवतीति तात्पर्यं॥ १२॥

पुनरपि चारित्रस्वरूपं श्लोकद्वयेन प्रतिपादयन्नाह—

द्वि० टीका—उत्तरोत्तरभाविषु अपरापरोत्पद्यमानेषु दर्शन-ज्ञानपर्यायेषु सम्यग्दर्शनज्ञानपर्यायेष्वधिकरण - भूतेषु स्थिरं अविचलं आलंबनं आश्रयणं चारित्रं चरणं भवति। यद्वा अथवा सुख-दुःखयो सतोर्विषय-भूतयोर्वामध्यस्थ्यं उदासीनता चारित्रं स्यात्। ज्ञाता ज्ञायकः द्रष्टा दर्शी अहं अह-

मेव एक अद्वितीयः सुखे-दुःखे सुख-दुःखानुभवने अहमेव एक असहायः। अपरमन्यत्सहायं न च नास्ति इति एवं इदं एतत् भावना-दार्ढ्यं भावना दृढत्वं, अथवा यथा चारित्रं चरणं मतं सम्मतं एतत् निजभावनारूपचारित्रं मुख्यं मुक्तिकारणं भवतीति तात्पर्यम् ॥ १३-१४ ॥

*संसारके समस्त दुखोंसे छूटने के लिये अन्तरङ्ग उपाय कौनसे हैं? इस प्रश्न का उत्तर देते हुए ग्रन्थकार बतलाते हैं—*

अन्वय-अर्थ—( स्वात्मलब्धये ) अपना शुद्ध आत्म-स्वरूप प्राप्त करने के लिये ( उपायः ) अन्तरङ्ग उपाय ( सद्दृष्टिज्ञानचारित्रम् ) सम्यग्दर्शन, सम्यग्ज्ञान, सम्यक्चारित्र है। ( तत्त्वे ) आत्म-तत्त्वमें ( याथात्म्यसंस्थितत्वम् ) यथार्थ श्रद्धान ( आत्मनः ) आत्माका (दर्शन) सम्यग्दर्शन ( मतम् ) माना गया है। ( प्रदीपवत् ) अपने आपको तथा अन्य पदार्थों को प्रकाशित करने वाले दीपकके समान ( यथार्थ-वस्तुनिर्णीतिः ) आत्मा का तथा अन्य पदार्थोंका यथार्थ निर्णय करना यानी-जानना ( सम्यग्ज्ञानं ) सम्यग्ज्ञान है। ( तत् ) वह सम्यग्ज्ञान ( स्वार्थव्यवसायात्म ) अपने आत्मतत्त्व का तथा अजीव आदि तत्त्वों का निश्चय करने रूप है, ( कथंञ्चित् ) किसी अपेक्षा से वह सम्यग्ज्ञान ( प्रमितेः ) प्रमिति यानी अज्ञान की निवृत्ति से ( पृथक् ) अलग है ( उत्तरोत्तरभाविषु ) उत्तर उत्तर यानी आगे आगे या उन्नत उन्नत होने वाली ( दर्शनज्ञानपर्यायेषु ) सम्यक्दर्शन और सम्यग्ज्ञान की पर्यायों में ( स्थिरम् ) स्थिर-अचल ( आलम्बनम् ) आलम्बन करना-ठहरना ( यद्वा ) अथवा ( सुखदुःखयोः ) कर्म-उदयसे होने वाले सुख दुखमें ( माध्यस्थ्यं ) मध्यस्थ भाव होना, ( अहम ) मैं ( एकः ) अकेला हूं, ( च ) और ( अपरः ) मेरा कोई दूसरा ( न ) नहीं है, ( सुखे दुःखे ) सुख दुखमें ( ज्ञाता दृष्टा ) मैं ज्ञाता द्रष्टा यानी-जानने

देखने वाला हूं, ( इति इदं ) इस प्रकार यह ( भावनादार्ढ्यं ) आत्म-भावना की दृढता ( अथवा ) या ( परम् ) उत्कृष्ट वीतरागभाव ( चारित्रम् ) सम्यक्चारित्र है ॥ ११-१२-१३ १४ ॥

भावार्थ—आत्मा का शुद्ध स्वभाव प्राप्त करने के लिये अन्तरङ्ग उपाय सम्यग्दर्शन, सम्यग्ज्ञान तथा सम्यक्चारित्र है। आत्मा और शरीर आदि पर-पदार्थ की भेदभाव रूप श्रद्धा तथा आत्मा की रुचि या आत्माका अनुभूति सम्यग्दर्शन है। आत्माका तथा अन्य पदार्थोंका तात्विक यथार्थ निश्चित ज्ञान होना सम्यग्ज्ञान है। वह आध्यात्मिक सम्यग्ज्ञान कथंचित् वाह्य पदार्थ-ज्ञान से भिन्न है। संसारसे, शरीरसे, विषय भोगोंसे, परिवारसे, तथा धन मकान आदि पदार्थोंसे विरक्त-भाव होना, व्रत-रूप चर्या तथा कर्म-उदय से होने वाले सुख दुखमें समान भाव का होना यानी दुख आने पर खेद विषाद न करना, सुख आने पर हर्षित न होना एवं अपने आपका सबसे पृथक् अकेले-पनका दृढ भावना रखना, सब बातोंमें अपने आपको केवल ज्ञाता द्रष्टा ( जानने देखने वाला ) बनाना, यानी सांसारिक विषयों में, सुख दुखमें राग द्वेष भावना से लीन न होना, विरक्त रहना, इन्द्रियों पर नियन्त्रण करना, प्राणीमात्र से मैत्री-भाव होना, सम्यक्चारित्र है। शुक्लध्यान द्वारा मोह भाव का पूर्ण क्षय करके वीतराग बनना यथा-ख्यात नामधारी उत्कृष्ट चारित्र है। इस तरह सम्यग्दर्शन, सम्यग्ज्ञान और सम्यक्चारित्र मुक्तिके अन्तरङ्ग उपाय हैं, क्योंकि ये आत्म-स्वरूप हैं ॥ ११-१२-१३ १४ ॥

एवं च कर्मणां संवरनिर्जरापूर्वकमात्मनः निजशुद्धस्व-रूपोपलब्धेः सद्दृष्टिज्ञानचारित्रम् अन्तरंग उपायः आत्मस्व-भावत्वात्। को वा बहिरंग उपाय इत्यत आह—

**तदेतन्मूलहेतोः स्यात्कारणं सहकारकम् ।**
**यद्बाह्यं देशकालादि, तपश्च बहिरङ्गकम् ॥ १५ ॥**

चन्द्रिका- एतन्मूलहेतोः एतस्य उपर्युक्तस्य रत्नत्रयात्मकस्य मूलहेतोः स्वात्मोपलब्धेरन्तरङ्गोपायत्वात्प्रधानसाधनभूतस्य यत् बाह्यं देशकालादि तपश्च सहकारकम् कारणं स्यात् तत् बहिरङ्गकम् स्वोपलब्धेः बहिरङ्ग उपायः साधनसाधनत्वात् परावलम्बनरूपत्वाच्च ।

बहिरंगकारणं निरूपयन्नाह—

द्वि० टीका—मूलहेतो रत्नत्रयरूपमुख्यकारणस्य यदेतत् यदिदं देशकालादि-कर्मक्षयोपयोगादि-देश-काल-संहननादिकं सहकारक सहकारि रूपं तत् तद्देशकालादि वाह्य बहिरङ्गकं कारण मोक्षकारणं स्यात् भवेत् । न केवल देशकालादि तपश्चाऽनशनादि तपश्चरणं-च बहिरङ्गकं वाह्यं मुक्तिकारणं स्यात् भूयात् रत्नत्रयं वहिरङ्ग सहकारि कारणं संयुक्तं मोक्षकारण भवतीति तात्पर्यम् ॥ १५ ॥

*अब मुक्तिके वहिरङ्ग उपायपर प्रकाश डालते हैं—*

अन्वयअर्थ—( एतन्मूलहेतोः ) इस अन्तरङ्ग उपादान मूलकारण का ( यत् ) जो ( देशकालादि ) देश काल आदि ( वाह्यं ) बाहरी ( च ) और ( तपः ) अनशन आदि वाह्य तप ( सहकारं ) सहकारी ( कारणं ) कारण है ( तत् ) वह ( वहिरङ्गकम् ) वहिरङ्ग उपाय ( स्यात् ) होता है ॥ १५ ॥

भावार्थ—जैसे लौकिक कार्योंको सिद्ध करनेके लिये मूल उपादान

कारण के साथ निमित्त कारणों की आवश्यकता होती है, अनुकूल निमित्त कारणों के विना मिले कार्य नहीं बनता। आत्मा चेतन रूप से सदा जीवित रहता है परन्तु संसार दशामें आत्मा को अपने जीवन के लिये आयु कर्मका उदय और श्वास ( सांस ) लेना, भोजन करना पानी पीना आदि बाहरी निमित्त कारण मिलना भी आवश्यक है; भोजन, जल, वायु आदि निमित्त कारण न मिलें या आयु कर्म समाप्त होजावे तो संसारी आत्मा का मरण हो जाता है, उसका पर्याय जीवन समाप्त हो जाता है। इसी कारण आत्मा को मुक्त होने के लिये भी अन्तरङ्ग उपादान कारण के साथ कर्मभूमि, दुःषम सुषमा-काल, द्विजवर्णों ( मुनिदीक्षा लेने योग्य ब्राह्मण क्षत्रिय वैश्य वर्ण ) में जन्म, शुक्लध्यान करने योग्य शक्तिशाली वज्रऋषभनाराचसंहनन मुनि दीक्षा, महाव्रत, समिति, गुप्ति, इन्द्रिय संयम, प्राणिसंयम, आत्म-ध्यान की दृढता के लिये उपवास आदि बाह्य तपों का आचरण भी परम आवश्यक है। इन सहकारी कारणों के विना प्राप्त हुए अन्तरङ्ग उपाय निश्चय सम्यग्दर्शन, सम्यग्ज्ञान, सम्यक्चारित्र की पूर्णता नहीं होती। अतः ये वहिरङ्ग कारण भी अनिवार्य हैं ॥ १५ ॥

तत्त्वस्वरूपसम्बोधनानन्तरं किं कर्तव्यं तदाख्याति—

**इतीदं सर्वमालोच्य, सौस्थ्ये दौःस्थ्ये च शक्तितः**
**आत्मानं भावयेन्नित्यं, रागद्वेषविवर्जितम् ॥ १६ ॥**

चन्द्रिका—भावयेत् पुनः २ चिन्तयेत्। कियत्कालं ? नित्यं सदैव, कम् ? आत्मानं। कथंभूतं ? रागद्वेषविवर्जितम्। रागश्च द्वेषश्च रागद्वेषौ प्रीत्यप्रीतिभावौ। ताभ्याम् विवर्जितं रहितम्। कथम् ? शक्तितः यथाशक्ति कस्मिन् काले ? अनुकूलावसरे, न केवलं सौस्थ्ये दौःस्थ्ये च प्रतिकूला-

प्रसंगेऽपि। किं कृत्वा? आलोच्य सर्वतः विमृश्य ऊहापोह-पूर्वकं विचार्य किं तत्? इदं सर्वम्। इदं किम्? इति, पूर्वं यत् यथा प्ररूपितम् तत् तथा तेनेव प्रकारेण।

उपरि यत् यथा व्याख्यातं तत् तथैव सर्वं सम्यगालोच्य यथाशक्ति अनुकूले प्रतिकूले चावसरे स्वं रागद्वेषविविक्तमेव नित्यं भावयेत्। न केवलमनुप्रेक्षेत एव, किन्तु तथा भवितुमन्तर्बहिश्च प्रयतेत, इत्याशयः।

एवमनेकान्तरूपेण हेयोपादेयस्वरूपं परिज्ञाय निजपरमात्मतत्त्वं भेव्यं चेति निरूपयन्नाह—

हि० टीका—इदमेतत् कथितात्मस्वरूपं सर्वं समस्तं समालोच्य सम्यग्ज्ञात्वा सौख्ये सुखे दौःख्ये दुःखे च सति शक्तितः आत्मशक्त्या आत्मानं निजशुद्धबोधचिदानन्दमयं टंकोत्कीर्णज्ञायकलक्षणात्मपदार्थं नित्यं सर्वदा भावयेत्-चिन्तयेत् रागद्वेषविवर्जितं रागद्वेषादिरहितं अत्र पातनिकैव तात्पर्यं॥ १६॥

*इस प्रकार आत्मा का ठीक स्वरूप समझ लेने के पश्चात् क्या करना चाहिये, सो बतलाते हैं—*

अन्वय-अर्थ—( इति इदं ) इस प्रकार ( सर्वं ) सब ( आलोच्य ) आलोचना-गुण दोष को विचार करके ( सौख्ये ) अनुकूल परिस्थिति में ( च ) और ( दौःख्ये ) दुखदायक प्रतिकूल स्थिति में ( शक्तितः ) यथा-शक्ति ( नित्यं ) सदा ( रागद्वेष-विवर्जितम् )

राग द्वेष से रहित-शुद्ध ( आत्मानं ) आत्मा को ( भावयेत् ) भावना करे ॥ १६ ॥

भावार्थ—ग्रन्थकार ने पीछे जो आत्मा का स्वरूप भिन्न भिन्न दृष्टिकोणों ( अपेक्षाओं ) से बतलाया है, उसको अच्छी तरह समझ करके सुख या दुख के समय सदा शुद्ध आत्मा का स्वरूप चिन्तवन करते रहना चाहिये जिससे चित्तमें क्षोभ उत्पन्न न हो। सुखी अवस्था में कभी राग भाव का उद्वेग न हो और दुखी अवस्था में शोक, द्वेष की भावना जाग्रत न हो, समता-भाव बना रहे। कषायभाव मन्द रहे। भव्य जीव ऐसा करनेमें प्रयत्नशील बना रहे॥ १६ ॥

एषा हि भावना कुतः कर्तव्या इति सदृष्टान्तमुपदिशति—

**कषायैः रञ्जितं चेतस्तत्वं नैवावगाहते।**

**नीलीरक्तेऽम्बरे रागो, दुराधेयो हि कौंकुमः ॥१७॥**

चन्द्रिका—नैव अवगाहते न हि अवधारयति। किं कर्तृ ? चेतः अन्तःकरणं मानसं ज्ञानं श्रुतज्ञानमिति यावत कथंचित् तद्भिन्नत्वात् आत्मा वा। कथंभूतं चेतः ? रञ्जितं रक्तम् व्यामिश्रमभिभूतं वा। कैः ? कषायैः। मोहक्षोभरूपैः रागद्वेषैः क्रोधादिभिः। एतदेव दृष्टान्तेन समर्थयते। —हि यतः दुराधेयः दुःखेन आधातुं योग्यः सहसा आधातुं न शक्यते इत्यर्थः। कः। रागः। कथंभूतः ? कौंकुमः कुंकुमसम्बन्धी। क्व ? अम्बरे वस्त्रे। कथंभूते ? नीलीरक्ते नीलरागेनानुरञ्जिते। यथा नीले वस्त्रे कुंकुमादिरागोऽवधारयितुमशक्यः तथैव यावच्चेतः कषायानुरक्तं तिष्ठति तावत् तत् शुद्धात्मस्वरूपं तत्त्वं अवधा-

रयितु न शक्नोति । तत एव रागद्वेषविवर्जितमात्मानं नित्यं भावयेन्मुमुक्षुरित्याशयः ।

सकषायस्यात्माराधना न घटते इति दृष्टान्तेन निरूपयन्नाह

द्वि० टीका— कषायैः क्रोधाद्यैनात्मभावैः रंजितं कलुषितं नीलीरक्ते नील्या रंजिते अम्बरे वस्त्रे कौंकुमः कुंकुमस्यायं कौंकुमो रागो वर्णः दुराधेयो धर्तुमशक्यः रागद्वेषादिपरित्यागेन विना सहजपरमात्मभावना न स्यादिति तात्पर्यम् ।। १७ ।।

*ऐसी भावना क्यों करनी चाहिये, इसका समाधान करते हैं—*

अन्वय-अर्थ— ( कषायैःरञ्जितं ) राग द्वेष आदि कषायों से रंगा हुआ ( चेतः ) मन ( तत्वं ) आत्मा के शुद्धस्वरूप को ( नैव ) नहीं ( अवगाहते ) विचार पाता है, जैसेकि ( नीलीरक्ते अम्बरे ) नीले रंग हुए कपड़े पर ( कौंकुमःरागः ) कुंकुमका रंग( हि )निश्चय करके ( दुराधेयः ) कठिनाई से चढ़ना है ।। १७ ।।

भावार्थ—शुद्धआत्मा का स्वरूप तभी विचारा जा सकता है जब कि चित्तमें कषाय भावों का गहरा मैल न चढ़ा होवे कषाय मन्द हों, विवेक शक्ति जाग्रत हो ; जैसे कुंकुम का लाल रंग सफेद या हलके रंगे हुए कपड़े पर चढ़ सकता है, गहरे नीले रंग से रंगे हुए कपड़े पर कुंकुम का रंग नहीं चढ़ता । इस कारण सदा अपने कषाय भावों को अच्छे प्रयत्न के साथ दबा करके रखना चाहिये जिससे आत्मा का विवेक कार्य करता रहे ।। १७ ।।

इदानीं शुद्धात्मस्वरूपोपलब्धये रागद्वेषरहितात्मभावनापूर्वकं त्वया कथम्भूतेन भाव्यमित्युपदिशति—

ततस्त्वं दोषनिमुक्त्यै निर्मोहो भव सर्वतः।
उदासीनत्वमाश्रित्य, तत्वचिन्तापरो भव ॥१८॥

चन्द्रिका—ततः तस्मात् कारणात्, कुतः ? यतो यथा नीलीरागादिपरिहारमन्तरा कौंकुमादिरागो वस्त्रे नाधातुम् शक्यते तथा रागद्वेषमोहरहितात्मभावनया तत्परिहारमन्तरा तत्त्वचिन्तापरता भवितुं नार्हति तस्मात् त्वं हे मुमुक्षो भव्य ! भव। कथभूतः ? निर्मोहः समस्तेभ्य इष्टानिष्टविषयादिभ्योऽन्तर्बहीरूपेभ्यो मोहविकल्पेभ्यः निर्गतः पृथग्भूतः। एतदनन्तर पुनरपि भव। कथंभूतः ? तत्त्वचिन्तापरः। तत्त्वं निजशुद्धात्मस्वरूपं तस्य चिन्ता चिन्तनम्—विषयान्तरेभ्यो व्यावृत्य तत्रैव एकाग्रतया स्थितिः तत्र परः लीनः। किं कृत्वा ? आश्रित्य अवलम्ब्य किं ? उदासीनत्वम् उपेक्षाभावम्

अयमाशयः—निजशुद्धज्ञानानन्दस्वरूपसिद्धये सर्वतः प्राक् आत्मनः रागद्वेषमोहादिदोषपरिहाराय सर्वेभ्य इष्टानिष्टविषयेभ्यस्तथा विकल्पेभ्यश्च मोहं त्यक्त्वा शुद्धात्मभावना कर्तव्या। तत्सिद्धौ शुभविकल्पेभ्योऽप्यौदासीन्यमाश्रेयम्। पुनः सर्वथा अप्रमत्तो भूत्वा निर्विकल्पसमाधिसिद्ध्यर्थं यत्नं कुरु।

पुनरपि तत्वभावनोपायमाह—

ततस्तस्मात् कारणात् त्वमात्मनो दोषनिमुक्त्यै रागद्वेषादिदोषपरिहारार्थं सर्ववस्तुषु निर्मोहो मोहरहितो भव। उदासीनत्वं शत्रुमित्रेषु माध्यस्थ्यं आश्रित्य उपढौक्य तत्व-

चिन्तापरः आत्मस्वरूपानुभवनतत्परोभव। निर्मोह-माध्यस्थ-भावनया विना तत्वसंवित्तिर्नागच्छतीति तात्पर्यं। १८॥

*फिर तत्वज्ञानी को कैसा बनना चाहिये, सो बतलाते हैं—*

अन्वय अर्थ—( ततः ) इस कारण ( दोषनिमुक्त्यै ) रागद्वेष क्षोभ, व्याकुलता, क्रोध, आदि दोषों से छूटने के लिये ( सर्वतः ) समस्त इष्ट अनिष्ट विषयोंसे ( त्वं ) तू ( निर्मोहः ) मोह ममता रहित ( भव ) बन ( उदासीनत्वं आश्रित्य ) शरीरसे, संसार के विषयभोगों से उदासीन बनकर ( तत्वचिन्तापरः ) आत्मतत्व के चिन्तवनमे तत्पर ( भव ) होजा॥ १८॥

भावार्थ—आत्मामें विवेक भावका लुप्त करने वाला कषाय भाव तब ही प्रबल होता है जबकि आत्मा इन्द्रियों या शरीर के इष्ट यानी-प्रियविषयोंमें राग भाव करता है और इन्द्रियां तथा शरीरके अनिष्ट यानी अप्रिय विषयोंमें द्वेष करता है। यदि सांसारिक,शारीरिक तथा ऐन्द्रिय ( इन्द्रियों के ) विषयों मे इष्ट अनिष्ट की विचारधारा छोडकर आत्मा उदासीन वन जावे तो अपना आत्म-स्वरूप प्राप्त किया जा सकता है, आत्माको कषाय मैलसे स्वच्छ होकर संसारसे छुटकारा मिल सकता है॥ १८॥

इदानीं प्रकारान्तरेण कर्तव्यं विज्ञापयति–

**हेयोपादेयतत्वस्य, स्थितिं विज्ञाय हेयतः।**
**निरालम्बोभवान्यस्मादुपेये सावलम्बनः॥ १९॥**

चन्द्रिका—हेयं च उपादेयं च तयोः समाहारः एवंभूतं यत्तत्वे तत् हेयोपादेयरूपं तत्त्वं। तस्य स्थितिं स्वरूपं काल-मर्यादां च विज्ञाय बुध्वा एतयोर्हेयतः त्याज्यात्परस्मात्अन्य-

स्मात् तत्त्वात् निरालम्बः तदवलम्बनरहितः, उपेये ग्राह्ये निजरूपे सावलम्बनः समाश्रयो भव।

तत्त्वं हि द्विधा हेयम् उपादेयम् च। तत्र हेयतत्त्वस्य आलम्बनं त्यक्त्वा उपादेयतत्त्वं समाश्रय। एवमुत्तरोत्तर-शुद्धशुद्धतरशुद्धतमोपादेयतत्त्वाश्रयणेन निजनिर्विकल्पज्ञानानन्द-स्वरूपध्याने स्थिरे सति परं तत्त्वं सर्वथा मुच्यते निजं शुद्धं शाश्वतिकं ज्ञानानन्दस्वभावं तु अवशिष्यते स्वोपलब्धिर्भवतीति आशयः।

हेयोपादेयं ज्ञात्वा हेयं त्यक्त्वा उपादेयं स्वीकुर्विति कथयन्नाह—

द्वि० टीका—हेयोपादेयतत्वस्य संसारसंसारकारणं मोक्षमोक्षकारणरूपं विज्ञाय ज्ञात्वा, हेयतः–हेयरूपं ज्ञात्वा हेयतः हेयरूपसंसारकारणात् निरालम्बः निराश्रयः भव। उपेये–उपेयः उपादेयरूपमोक्षमोक्षकारणं तस्मिन् स्वस्वरूपे सावलंबनमाश्रयो भव त्वं पानिकार्थोऽत्र तात्पर्यं ॥१९।

अब दूसरी तरह से इसी बात को समझाते हैं—

अन्वय-अर्थ—( हेयोपादेयतत्वस्य ) हेय और उपादेय तत्वकी (स्थिति) स्वरूपको विज्ञाय ) जानकरके ( अन्यस्मात् हेयतः ) अन्य पदार्थ-रूप हेय–यानी त्याग देने योग्य तत्वका ( निरालम्बः भव) आश्रय लेना छोड दो ( उपेये ) उपादेय—ग्रहण करने योग्य अपने आत्म तत्व का ( सालम्बनः ) आश्रय ग्रहण करो। । १६ ॥

भावार्थ—संसारमें दो प्रकार के तत्त्व ( पदार्थ ) हैं— १-हेय, २-उपादेय। जो तत्त्व आत्माका अहित करने वाले हैं, इसी कारण ज

त्याग करने योग्य हैं, वे हेय तत्त्व हैं और जो आत्मा के लिये हितकारी हैं, इसी कारण ग्रहण करने योग्य हैं, वे उपादेय तत्त्व हैं। सात तत्त्वों में अजीव आस्रव, बन्ध तत्व हेय हैं क्योंकि उनके कारण आत्मा को संसार भ्रमण करना पड़ता है, संवर और निर्जरा तत्व उपादेय हैं क्योंकि उनसे कर्मों की शक्ति क्षीण होती है, आत्माकी शक्ति प्रबल होती है, अतः संवर और निर्जरा के कारणों का आश्रय लेकर आत्मा के गुणों का विकास करना चाहिये जिससे कि कालान्तर में मोक्ष तत्व की प्राप्ति हो। आस्रव और बन्ध के कारणों का आश्रय यथाशक्ति छोडते जाना चाहिये ॥ १६ ॥

पुनरपि स्वोपलब्धये प्रकारान्तरेण उपायंद र्शयति—

**स्वं परं चेति वस्तु त्वं वस्तुरूपेण भावय।**
**उपेक्षाभावनोत्कर्षपर्यन्ते शिवमाप्नुहि ॥ २० ॥**

चन्द्रिका—त्वं भावय हे भव्य! पुनः २ चिन्तय, किं? वस्तु तत्त्वं, केन प्रकारेण? वस्तुरूपेण वस्तुनः रूपं वस्तुरूपं याथात्म्यं तेन। तत्कथं? स्वं परं च इति। स्वं निजं चेतनात्मकं सर्वथोपादेयम्। परमतो भिन्नं सर्वमपि चेतनाचेतनात्मकम्। एवं कृते सति किं स्यात्? अत आह आप्नुहि प्राप्स्यसीत्यर्थः किं? शिवं मोक्षं निजशुद्धस्वरूपं कदा? उपेक्षाभावनोत्कर्षपर्यन्ते। उपेक्षा रागद्वेषमोहराहित्यम् तस्या भावना पुनः २ प्रवर्तनसंजातसंस्कारः। तस्या उत्कर्षो वृद्धिः तस्य पर्यन्ते अन्तिमे स्थाने जाते सति।

अयमाशयः —मोहं रागद्वेषादिकं चाकृत्वा सर्वमपि वस्तु

तत्स्वरूपमात्रेण बोध्यम् श्रद्धेयम् च । न केवलं बोध्यं श्रद्धेयं च पुनः २ यथाशक्ति सर्वदैव चिन्तनीयम् च । एवं सति स्वस्माद्भिन्ने सर्वस्मिन् वस्तुनि उपेक्षाभावः सेत्स्यति । अन्तिमस्थानपर्यन्तं तत्सिद्धौ तु शिव- स्वरूपमात्मानं प्राप्स्यसीति ।

यद्यपि निजात्मद्रव्यं उपादेयं तथापि तत्रासक्तिं मा विधेहीत्यावेदयति—

( तथाप्यतीव तृष्णा वा, हन्त मा भूत् त्वात्मनि ।
यावत् तृष्णा प्रसूतिः स्यात् तावन्मोक्षं न यास्यसि ॥२०॥
(पाठान्तरमिति )

द्वि० टीका—तथापि एवं सत्यपि हन्त अहो आत्मन्. तव ते आत्मनि निजशुद्धबुद्धस्वरूपे तृष्णा माभूत् मा भूयात् यावत् कालं तृष्णाप्रसूतिः कांक्षोत्पत्तिः स्याद् भवेद् तावत् कालं मोक्ष मुक्तिपदं न यास्यसि न गमिष्यसि परं वीतरागपरिणामेन विना मोक्षो न घटत इति तात्पर्यं ॥ २० ॥

*अपना शुद्ध स्वरूप प्राप्त करने के लिये प्रकारान्तर से अन्य उपाय बतलाते हैं—*

अन्वय-अर्थ—( त्वं ) तू ( स्वं ) अपने आत्म तत्व को ( च ) और ( परं ) अन्य वस्तुको ( वस्तुरूपेण ) वस्तु-स्वभावसे ( भावय ) भावना कर। ( इति ) इस प्रकार ( उपेक्षाभावनोत्कर्षपर्यन्ते ) उपेक्षा यानी-रागद्वेष, रहितपना भाव की पूर्णवृद्धि हो जाने पर (शिवम्) मोक्ष को [ आप्नुहि ] प्राप्त कर ॥ २० ॥

भावार्थ—निज आत्म-तत्वको अपने रूप में और शरीर, पुत्र,

स्त्री, मित्र तथा धनआदि चेतन अचेतन पदार्थोंको अन्य पदार्थके रूपमें समझना चाहिये। पर-पदार्थ जब अपना नहीं है तब उसके साथ मोह ममता राग भाव करना व्यर्थ है, पर-पदार्थ को अपने आत्मा से भिन्न समझ लेने पर उससे द्वेष घृणा करना भी निरर्थक है। इस तरह उनसे राग,द्वेष भावका त्याग करके उपेक्षा भाव रखना चाहिये। उपेक्षा भाव जितना बढता जाता है उतना ही आत्मतत्व निर्मल निरा-कुल बनता जाता है और मुक्ति निकट आती जाती है। जब वह निर्मोह उपेक्षा भाव पूर्ण वृद्धि–चरमउत्कर्ष पर पहुंच जाता है तब आत्मा कर्म-बन्धन तथा संसार–भ्रमण से मुक्त हो जाता है। उसी उपेक्षा भाव के द्वारा मुक्ति प्राप्त करने की प्रेरणा ग्रन्थकार ने की है॥ ०॥

उपेक्षाभावना हि कदापर्यंतं याति इत्यागमात्प्रदर्श्य समर्थ्य च तद्विरुद्धा हि कांक्षा कुतो न कर्तव्या इति दृढयति–

**यस्य मोक्षेऽपि नाकाङ्क्षा स मोक्षमधिगच्छति ।**
**इत्युक्तत्वाद्धितान्वेषी काङ्क्षां न क्वापि योजयेत् २१**

चन्द्रिका– न योजयेत् संलग्नां न कुर्यात्, कां? काङ्-क्षामभिलाषाम्, क्व? क्वापि, स्वस्माद्भिन्ने परत्र सर्वत्रापि बाह्याभ्यन्तरविषयमात्रे। कः? हितान्वेषी, हितं मोक्षं निजशु-द्धस्वरूपोपलम्भमन्विच्छति वाञ्छति गवेषयति वा इति हितां-न्वेषी। शाश्वतिक-निर्बाधनिजटङ्कोत्कीर्णज्ञानानन्दस्वरूपोप-लिप्सुः। कुत एवमितिचेत् इत्युक्तत्वात् इति एवं प्रकारेण उक्त-त्वात्। एतद्धि सार्वज्ञं वच इति सर्वज्ञकल्पैर्गणधरादिभिरागमे निर्दिष्टत्वात्। किं तत्सार्वज्ञं वच इति चेत् "यस्य मोक्षेऽपि

नाकाङ्क्षा स मोक्षमधिगच्छति" इति, अधिगच्छति प्राप्नोति, कं ? मोक्ष सर्वकर्मविप्रमोक्षं निजशुद्धचिदानन्दस्वरूपोपलम्भं वा कः ? सः । सः कः ? यस्य न,नास्ति, का ? आकाङ्क्षा स्पृहा लिप्सा वा । क्व ? मोक्षेऽपि । अपि शब्दात् पुण्यकर्मोदयजनितेष्वाभ्युदयिकेषु पदेषु तु किं वाच्यम् । तदभिलाषायास्तु प्रागेव दूरोत्सारितत्वात् ।

सर्वथा निरीहवृत्तिमन्तरा निर्विकल्पसमाधिबलेन न हि कश्चिदपि साधुरेकान्तेन सर्वकर्माणि निर्जीर्य निजविशुद्धज्ञानानन्दस्वभावेऽवस्थातुं शक्नोतीति हेतोः सर्वतः मोहोदयजन्या परूपा काङ्क्षा त्याज्या, तत्सिद्धये च बाह्येषु इन्द्रियानिन्द्रियविषयेष्विष्टानिष्टभावनामपाह्य आत्मभावना उद्योतोद्यवननिर्वाहसिद्धिनिस्तरणक्रमेण उपेक्षोत्कर्षपर्यन्तम् नेया चेति भावः

कुत एतदित्युक्ते प्रत्युत्तरमाह—

द्वि० टीका—यस्य परमयोगीश्वरस्य मोक्षेऽपि निर्वाणेऽपि कांक्षा तृष्णा नास्ति सः निर्विकल्पपरिणामपरिणत: मोक्षं अविनश्वरस्थानं अधिगच्छति इत्युक्तत्वात् एवं कथनात्-हितान्वेषी मोक्षसुखाभिलाषी भवान् क्वापि चेतनाचेतनात्मके वस्तुनि कांक्षा तृष्णां न योजयेत् न युंजीत ।

उक्तं च-परमात्मप्रकाशे —

मोक्खु म चिन्तहि जोइया मोक्खु ण चिंतिउ होई ।
जेण णिवद्धउ जीवडउ मोक्खु करे सई सोई ॥

*अब यह बतलाते हैं कि सब प्रकार की इच्छा का त्याग कर देना चाहिये—*

अन्वय-अर्थ — ( यस्य )जिसके ( मोक्षेअपि ) मोक्ष में भी ( आकांक्षा ) अभिलाषा ( न ) नहीं होती ( सः ) वह भव्य मनुष्य ( मोक्षं ) मोक्ष को ( अधिगच्छति ) प्राप्त कर लेता है। ( इति ) ऐसा ( उक्तत्वात् ) सर्वज्ञ देव द्वारा अथवा आगम द्वारा कहा गया है, इस कारण ( हितान्वेषी ) अपना हित खोजने वाला व्यक्ति (अपि) किसी भी विषयमें ( आकांक्षां ) इच्छा को ( न योजयेत ) न करे।

भावार्थ—किसी भी पद को पानेकी या किसी भी वस्तु को प्राप्त करने की इच्छा करना उचित नहीं है। विशेष करके आत्महित चाहने वाले व्यक्ति को तो सांसारिक इच्छा तो सर्वथा करनी ही नहीं चाहिये, इतना ही नहीं, वल्कि उसे मोक्ष की इच्छा भी नहीं करनी चाहिये। क्योंकि 'किसी भी तरह की इच्छा-अभिलाषा-आकांक्षा ( ख्वाहिश ) मोह की क्रिया है। जब तक मोह भाव रहेगा तब तक आत्मा मुक्त कैसे हो सकता है ? इसी कारण सर्वज्ञ तीर्थंकर भगवान ने अपनी वाणी द्वारा कहा है और गणधर, आचार्यों आदि ने आगम ग्रन्थों में लिखा है कि "मोक्ष उसी को प्राप्त होती है जिसको मोक्ष की भी इच्छा नहीं होती।" इस कारण आत्म-हितैषी को किसी भी तरह की इच्छा न करनी चाहिये ॥ २१ ॥

प्रकारान्तरेण कांक्षां त्यक्तुं दिशति—

सापि च स्वात्मनिष्ठत्वात्सुलभा यदि चिन्त्यते ।
आत्माधीने सुखे तात, यत्नं किं न करिष्यसि ।२२।

चन्द्रिका— अपि च प्रकारान्तरेण काङ्क्षायाः परिहारं निर्दिशतीत्यर्थः। यदि विचार्यते पुनः पुनः विचारविषयीक्रियते चेत् सर्वैरपि संज्ञिभिरिति शेषः का? सा पूर्वोक्ता काङ्क्षा, कथभूता? सुलभा अक्लिष्टा। कुतो हेतोः? स्वात्मनिष्ठत्वात् स्वस्यात्मनि तिष्ठतीति हेतोः। तर्हि हे तात! किं न करिष्यसि अवश्यं करिष्यसि, अवश्यमेव कुर्या इत्यर्थः कं? यत्नं। क्व? सुखे कथम्भूते? आत्माधीन निजाश्रिते स्वैरे।

काङ्क्षा हि सर्वसंसारिणां स्वभावत एव प्रवर्तते तेषामनादितः मोहोदय-विशिष्टत्वात्। अत एव सा दुस्त्यजा। परन्तु यावत् काङ्क्षा तावत् संसारदुःखपरम्परा वा। दुःखनिवृत्त्यै अनन्त–शाश्वतिकसुखस्वरूपशुद्धात्मलब्धयें तु सा सर्वात्मना त्याज्यैव। ततः किं कर्तव्यमिति जिज्ञासा परिहाराय ग्रन्थकर्ता 'हे तात' इति कोमलालाप-पूर्वकं भव्यमभिमुखीकृत्य सम्यगुपायमिह दर्शयति। हे भव्य! केवलमिह प्राक्काङ्क्षाया विषयपरिवर्तनं विधेयम्।

मोहक्षोभविषयेषु बाह्येषु पदार्थेषु प्रवर्तमानां कांक्षां ततो निवर्त्य आत्माधीनां विधेहि, शुद्धात्मसुखविषयिणीं कुरु। एवं यत्ने कृते त्वं निरीहवृत्तिभूत्वा एकत्ववितर्क-ध्यानयोग्यतां प्रसाध्य तद्ध्यान-सिद्ध्या च संसरणकारणानि तिरस्कृत्य सर्वत आत्माधीनं सुखं स्वभावत एव प्राप्स्यसि इति स्वात्मनिष्ठ-

त्वादेव हेतोर्मुमुक्षुणा त्वया बहिर्विषयेषु प्रवर्तमाना काङ्क्षा केवलम् अन्तरात्मसुखविषयिणी कर्तव्या। शुद्धोपयोगसिद्धेःप्राक् शुभोपयोगस्यापरिहार्यत्वात् सुकरत्वाच्च।

भेदज्ञानपूर्विकोपेक्षा मोक्षं ददातीति आख्याति—

द्वि० टीका— इति अनेन कथितक्रमेण स्वम् आत्मानं परम् चेति भिन्नमपि वस्तुद्रव्यं वस्तुरूपेण सत्यरूपेण चिन्तय भावय उपेक्षाभावनोत्कर्षपर्यन्ते सर्व-वस्तुषूदासीन-भावनाप्रकर्षस्यावसाने शिव मोक्षं आप्नुहि प्राप्नुहि पात-निकार्थोऽस्य भावार्थः ॥ २२ ॥

*अब अन्य प्रकार से इच्छा को त्याग देने का उपदेश करते हैं—*

अन्वय-अर्थ— ( सा अपि ) वह इच्छा भी ( यदि ) यदि ( स्वात्मनिष्ठत्वात् ) अपने आत्मा में ही होने के कारण ( सुलभा ) सुलभ ( चिन्त्यते ) समझते हो तो ( तात! ) हे तात ! (आत्माधीने) स्वाधीन ( सुखे ) सुख पाने में ( यत्नं ) प्रयत्न ( किं न करिष्यसि ) क्या तुम न करोगे ? यानी-अवश्य करोगे।

भावार्थ—समस्त संसारी जीव अनादिकालसे मोह के कारण अनेक प्रकार के भोगों को प्राप्त करने की कोई न कोई इच्छा किया करते हैं क्योंकि इच्छा अपने ही आत्मा में उत्पन्न होती है, अतः इच्छा करना कठिन नहीं है, सरल बात है। परन्तु सांसारिक विषय भोगों की इच्छा से सब तरह आत्मा में अशान्ति होती है। जिस विषय की इच्छा होती है, उस विषय को पानेके लिये बहुत भारी परिश्रम करना पड़ता है, यदि परिश्रम करने पर भी वह विषय प्राप्त नहीं होता तो बहुत भारी मानसिक दुख होता है, यदि वह विषय मिल जाता है तो उसके भोगने से तृप्ति नहीं होती, तृष्णा और

बढ़ती जाती है। इस कारण सांसारिक इच्छाओं को छोड़कर भव्य-जीवको आत्म-सुख प्राप्त करने की इच्छा करनी चाहिये। परन्तु शुक्ल ध्यान की दशामें वह इच्छा भी त्याग देनी पड़ती है; या वह इच्छा उस निर्विकल्प ध्यान में स्वयं छूट जाती है। तब अनन्त सुख मिलता है। इस कारण ग्रन्थकार बड़ी मीठी कोमल भाषा 'में तात' शब्द द्वारा सम्बोधन करके कहते हैं कि तू स्वाधीन सुख प्राप्त करने का यत्न कर ॥ २२ ॥

ततः परं केन क्रमेण किं करोमीति जिज्ञासां मनसि निधाय शुद्धोपयोगस्थितेः क्रमं दर्शयति—

**स्वं परं विद्धि तत्रापि, व्यामोहं छिन्धि किन्त्विमम् ।**
**अनाकुलस्वसंवेद्ये, स्वरूपे तिष्ठ केवले ॥२३॥**

चन्द्रिका—बाह्यविषयिणीमाकाङ्क्षामन्तरात्मात्मसुखविषयिकां विधातुं उपेक्षाभावनामुत्कर्षपर्यन्तं नेतुं च सर्वतः पूर्वं विद्धि अवबुध्यस्व, किं? स्वं निजमात्मतत्त्वम्, तथा परमात्मनो भिन्नं सर्वमपि तत्त्वम्। एवं भेदज्ञानाभ्यासे सति पुनः किं करोमीत्यत आह—किन्तु, भेदज्ञानाभ्यासे जातेऽपि पुनः कर्तव्यविशेषं समाचर। किं करोमि? छिन्धि द्वैधिभावं नय सर्वथा अपाकुरु, किं? इमम् पूर्वमुपादेयतया निर्दिष्टम्, किम् व्यामोहम् इदं—स्वं, इदं परमिति पक्षग्रहम्। क्व? तत्रापि भेदज्ञानेऽपि।

आत्मसुखविषयिण्यां आकाङ्क्षायां क्रियमाणस्य यत्नस्य उत्पत्तिस्थितिवृद्ध्यर्थं पूर्वं स्वं परं च तत्त्व विद्धि तदनन्तरं

तयोः "अहमहमिमे, इमे नाहमेतेषां नैते मम, अहमेभ्यः सर्वथा भिन्नः इमे तु सर्वथा मत्तो भिन्नाः "एवमाकारकम् विकल्प-व्यामोहम् दूरीकुरु। एवं सति उपयोगं कुत्र नयामीति समाधानाय विधिविशेषं दिशति। तिष्ठ स्थिरीभव उपयोगं निरोधय, कुत्र? स्वरूपे, स्वस्य रूपं स्वरूपं ज्ञानाद्यात्मकं तत्र। कथंभूते? केवले अन्यनिरपेक्षे विकल्पादिकारणावलम्बनरहिते नयनिक्षेपानुयोगाद्याश्रयशून्ये च। पुनः कथंभूते? अनाकुल-स्वसंवेद्ये, न आकुलः संक्लिष्ट इत्यानाकुलः स चासौ स्वश्च तेन संवेद्ये, समस्ताभिराकुलताभी रहितेनैवात्मनानुभवयोग्ये।

हेयोपादेयरूपस्वपरतत्वं परिज्ञाय हेयं त्यक्त्वा उपादेयतत्वमाश्रयणीयम्। उपादेयेऽपि रागद्वेषविकल्पं त्यक्त्वा उपेक्षा भावना साध्या। एतदर्थं बाह्यविषया काङ्क्षा हेया। सापि पुनः शुद्धात्मविषयिणी विधेया। तत्रापि समस्ताकुलतानिमित्तं व्यामोहरूपं पराश्रयमतद्रूपं भेदसाधनं च अपसार्य शुद्धे निज-स्वरूपे एव उपयोगे स्थिते पराणि क्षीयन्ते निज-ज्ञानानन्दात्मकः आत्मा तु स्वयमवतिष्ठते, इति तात्पर्यम्।

मोक्षपददानसमर्थोपेक्षा कथं स्यादित्युत्तरमाह—

द्वि० टीका—सापि च उपेक्षाभावनापि च स्वात्म-निष्ठत्वात् स्वस्वरूपनिष्ठत्वात् सुलभा सुप्राप्या चिन्त्यते ज्ञायते यदि भवति चेत् आत्माधीने स्वाधीने फले उपेक्षा भावनात्मकफले तात! अहो पितः यत्नं उद्योगं किं न करि-

च्छयसि किमिति न करोसि त्वं ईदृग्भूतभावनायाम् यत्नं कुर्विति तात्पर्यम् ॥ २३ ॥

*अब शुभोपयोग से शुद्धोपयोग में आने का क्रम बतलाते हैं—*

अन्वय-अर्थ—( स्वं ) अपने आत्मा को, ( परं ) शरीर आदि अन्य पदार्थ को ( विद्धि ) समझो ( किन्तु ) किन्तु (तत्र अपि) ऐसा होने पर भी ( इयं ) इस भेदभावात्मक ( व्यामोहं ) पक्ष को भी ( छिन्धि ) दूर करदो। ( केवले ) केवल ( अनाकुलत्वस्वसंवेद्ये ) निराकुलता रूप स्वानुभव से जानने योग्य ( स्वरूपे ) अपनेरूप में ( तिष्ठ ) ठहर जाओ।

भावार्थ — पहले आत्मा और शरीर आदि पर-पदार्थ का स्वरूप समझ कर भेद-विज्ञान प्राप्त करना चाहिये जिससे पर पदार्थों से रुचि हट करके अपने आत्मा में लगे। परन्तु इसके बाद "यहमेरा-आत्मा है, यह हेय पर-पदार्थ है" इत्यादि प्रकार का पक्ष भी छोड़ देना चाहिये और निर्विकल्प रूपसे अपने आत्मस्वरूप में ठहर जाना चाहिये। निर्विकल्प आत्म-स्वरूपमें ठहरना ही शुक्लध्यान है, शुद्ध उपयोग है। स्व-पर का भेद-विज्ञान शुभोपयोग है। इस तरह शुभोपयोग से शुद्धोपयोग में आना चाहिये। ॥ २१ ॥

अनाकुलस्वसंवेद्यकेवलस्वरूपस्थितया किं सिद्ध्यति ? इति ग्रन्थस्यान्ते साक्षात्कारणप्रदर्शन-पूर्वकमन्तिमं साध्यं फलं प्रदर्शयति—

**स्वः स्वं स्वेन स्थितं स्वस्मै स्वस्मात्स्वस्याविन-**
**श्वरम्।**
**स्वस्मिन् ध्यात्वा लभेत् स्वोत्थमानन्दमामृतं पदम् ॥**

चन्द्रिका—लभेत् प्राप्नुयात् कः ? स्वः अयं ज्ञानलक्षणः स्वतन्त्र आत्मा कं ? पदम् अवस्थाम् कथंभूतम् ? स्वोत्थम् स्वस्मात् आत्मन उत्था उत्पत्तिर्यस्य स तम् आत्मोद्भूतम्, पुनः कथंभूतम् ? आनन्दम् सम्यक्रूपमृद्धाव्याबाधाल्हादरूपम् पुनः कथंभूतम् ? अमृतम् अपूर्वजरामरणहरसंतर्पकस्वभावम् पुनः कथम्भूतम् ? अविनश्वरम् अक्षयम् । कस्य ? स्वस्य आत्मनः । किं कृत्वा ? ध्यात्वा एकाग्रीभूय सततश्चिद्-व्यापारं निरुध्यात्मन्येव स्थिरीकृत्य । कं ? स्वम् प्रमित्याश्रयभूतम् आत्मानम् । कथंभूतम् ? स्थितम् स्वयंसिद्धनिश्चलाविकृतस्थिरात्मस्वरूपम् केन ? स्वेन करणभूतपरिच्छेदकपरिणामेन । कस्मै ? स्वस्मै सम्प्रदानभूताचरक्षणवर्तिनिजपरिणामाश्रयफलरूपाय । कस्मात् ? स्वस्मात् पूर्वपर्यायापायोपादानभूतध्रुव-स्वभावाश्रय-स्वरूपात् । कस्मिन् ? स्वस्मिन् असाधारणकारणरूपकरणशक्त्याधारे निजस्वरूपे ।

अभेदकारकरूपेण ध्याने सत्येवात्मनः सर्वथा परसम्बन्धनिवृत्तौ स्वरूपेऽवस्थानसंभवात् स्वस्याक्षयानन्तज्ञानानन्दामृतपदलाभो भवतीति तदेव प्रार्थ्यं साध्यं चेति भद्रम् ।

षट्कारकरूपेण आत्मद्रव्यं विशेषयति

द्वि० टीका—स्वस्मात् आत्मद्रव्यात् स्वस्मै आत्मस्वरूप-प्राप्त्यर्थं स्वस्यात्मनः अविनश्वरे अक्षये स्वस्मिन्

आत्मनि स्थितं स्वं आत्मस्वरूपं स्वस्तत्त्वं कर्त्ता स्वेन आत्मना कृत्वा निर्विकारपरिणामेन ध्यात्वा संचिन्त्य इत्थं अनेन प्रकारेण अनन्तसुखस्वरूपं अमृतपदं मरणादि-दुःखरहितं मुक्तिस्थानं लभस्व प्राप्नुहि क्रियाकारकसम्बन्धो व्यवहारेण यद्यपि निरूपितो निश्चयेन नास्तीति तात्पर्यम् ॥ २४ ॥

*अब श्री अकलंकदेव ग्रन्थका उपसंहार करते हुए अन्तमें लिखते हैं—*

अन्वय-अर्थ —( स्वः ) अपना आत्मा ( स्वेन ) अपने द्वारा ( स्थितं ) स्थित ( स्वं ) अपने स्वरूपको ( स्वस्मै ) अपने लिये ( स्वस्मात् ) अपने आत्मासे ( स्वस्य ) अपने आत्माका ( स्वोत्थं ) अपने आत्मासे उत्पन्न हुआ ( अविनश्वरम् ) अविनाशी ( आनन्दामृतं-पदम् ) आनन्द-अमृतमय पद ( स्वस्मिन् ) अपने आत्मामें ( ध्यात्वा ) ध्यान करके ( लभेत् ) प्राप्त करे।

[illegible]—श्री भट्टअकलंकदेवने इस श्लोकमें सातों विभक्तियों और छहों कारकोंके रूपमें आत्माको रखकर परम अविनश्वर आनन्द प्राप्त करनेकी प्रेरणा की है।

यह आत्मा शुद्धोपयोगके रूपमें अपने आत्माको अपने ध्यान द्वारा अपने लिये अपने से ( पञ्चमी विभक्तिके रूपमें स्वयं अपनी अपनी पूर्ण पर्याय को छोड़कर अपने ध्रुव उपादानसे ) अपने आत्मा से उत्पन्न हुए परम अविनश्वर आनन्दरूपी अमृत को ( जन्म मरण-रोग दूर करने वाले अमृत रूपको ) अपने आत्मामें ही एकाग्रचित्तवृत्ति लगाकर प्राप्त करे, ऐसी हितकारी प्रेरणा ग्रन्थकार करते हैं ॥ २४ ॥

एवं स्वरूपसम्बोधनं विधाय तदध्ययने फलप्रदर्शनपूर्वकं भव्यान् प्ररोचयति—

इति स्वतत्त्वं परिभाव्य वाङ्मयम्,
य एतदाख्याति शृणोति चादरात्।
करोति तस्मै परमार्थसम्पदम्,
स्वरूपसम्बोधनपञ्चविंशतिः ॥ २५ ॥

चन्द्रिका— करोति विदधाति का ? स्वरूप सम्बोधन-पञ्चविंशतिः। स्वस्यात्मनः रूपं याथात्म्यस्वरूप तस्य संबोधनं सम्यग्ज्ञापनं तत्र प्रवृत्ता पञ्चविंशतिः इयम् पञ्चविंशति-पद्यप्रमाणा सदर्भरूपा रचना। किं करोति ? परमार्थसम्पदम् परमश्चासौ अर्थश्च परमार्थः स एव सम्पत् ताम्। सर्वोत्कृष्टस्वाधीनानन्तज्ञानानन्दामृतपदोपलब्धिमित्यर्थः, कस्मै ? तस्मै। तस्मै कस्मै ? य आख्याति प्रकथयति वाचयति, न केवलमाख्याति शृणोति च अवगृह्णाति च। कथम् ? आदरात् सविनयम्। किम् ? एतत् वाङ्मयम् शब्दसन्दर्भम्। किं कृत्वा परिभाव्य परिशील्य, किम् ? स्वतत्त्वं निजात्मस्वरूपं। कथं ? इति पूर्वोक्तप्रकारेण।

यः सविनयं स्वरूपबोधकमेतत् ग्रन्थसन्दर्भमधीत्यात्रोक्तमात्मतत्त्वं पुनः पुनर्भावयति ज्ञात्वा श्रद्धायाचरति मनसाऽभ्यस्यति परेभ्यो भव्येभ्यो व्याख्याय बोधयति, यश्च श्रोता सादरम् शृणोति, सः तत्फलेन पुण्याभ्युदयान् भुक्त्वाऽन्ते कर्माणि संवृत्य निर्जीर्य च परमनिःश्रेयसरूपमात्मलीनं ज्ञाना-

नन्दपदम् चिरमनुभुञ्जानः सदा सिद्धे स्वरूप एव तिष्ठतीति एपा स्वरूपसम्बोधनपञ्चविंशतिका मुमुक्षुभिर्निरन्तरम् मनसा वचसा, वपुषा, अनुभाव्या, व्याख्येया, श्रोतव्या चेति शुभम्।

उपसंहारद्वारेण ग्रन्थनाम ग्रंथाध्ययनफलं कथयति—

द्वि० टीका—इति अनेन कथितक्रमेण स्वतत्त्वं आत्मतत्त्वं परिभाव्य विचार्य ये केचनात्मभावना रताः। कृतादराः कृतानुरागाः सन्तः वाङ्मयं वाचा निर्वृत्तमिदं शास्त्रं पठन्ति उच्चारयन्ति च परपठनकाले शृण्वन्ति च तेषां कृतादराणां स्वरूपसम्बोधनपञ्चविंशति आत्मस्वरूपप्रद्योतकपंचविंशतिश्लोकरूपशास्त्रं परमात्मसम्पदं परमात्मप्राप्ति करोति विदधाति परं मोक्षार्थिनो हेयोपादेयरूपबहिस्तत्त्वमन्तस्तत्त्वं परमतत्त्वं व्यवहारनिश्चयाभ्यां ज्ञात्वा विश्ववस्तुरूपे अविचलास्ति चेति तात्पर्यं ॥ २५

स्वरूपसम्बोधनपंचविंशतिः पदार्थ-कथनात्मिका वृत्तिः समाप्ता।

*अब ग्रन्थको समाप्त करते हुए ग्रन्थकार इस ग्रन्थके स्वाध्यायका फल बतलाते हैं —*

अन्वय-अर्थ—( इति ) इस पूर्वोक्त प्रकार ( यः ) जो व्यक्ति ( एतत् ) इस ( वाङ्मयम् ) वचनमय ( स्वतत्वं ) अपने आत्मतत्व को ( परिभाव्य ) परिशीलन करके ( आदरात् ) आदरसे बांचता है ( च ) और-या ( शृणोति ) सुनता है, ( उसके लिये ) ( स्वरूपसम्बोधनपंचविंशतिः ) २५ २५ श्लोकवाला, आत्म-स्वरूपका बोध कराने वाला स्वरूपसम्बोधन ग्रंथ ( परमार्थसम्पत् ) उत्कृष्ट आत्म-सम्पत्ति का ( करोति ) करता है-प्रदान करता है ॥ २५ ॥

भावार्थ — इस २५ श्लोकोंके छोटेसे स्वरूपसंबोधन ग्रंथ द्वारा शुद्धआत्माका स्वरूप और उस शुद्ध आत्म-तत्वको प्राप्त करने का उपाय ग्रंथकार ने बड़े सुन्दर-सरल, संक्षेपसे प्रगट किया है। जो व्यक्ति इसका आदरके साथ वाचन, श्रवण, मनन करे उसके आत्मामें ऐसे शुभसंस्कार उत्पन्न होते हैं जिनके कारण वह कालांतरमें अपना शुद्ध आत्म-स्वरूप-मोक्षलक्ष्मी प्राप्त कर लेता है।

इस प्रकार स्वरूपसंबोधन ग्रंथकी सरल हिंदी टीका भाद्रपद सुदी दशमी बुधवार, वीर सं० २४६३ दिनाङ्क १३ सितम्बर १६६७ को (दशलक्षण पर्वमें प्रवचनके लिये आनेके कारण) दुर्गकी जैन धर्मशालामें समाप्त हुई।

---

## सुधारणीय भूल

द्वितीय संस्कृत टीकाकार ने पृष्ठ २८० पर पाठान्तर रूपसे २० नं० का एक अन्य श्लोक लिखकर उसकी टीका लिखी है। इस कारण प्रमादवश २० वें मूल श्लोककी द्वि० संस्कृत टीका २२ वें श्लोकके नीचे छप गई है। २२वें श्लोककी द्वि० टीका२३ वें श्लोकके नीचे छप गई। अत एव २३ वें श्लोककी अवशिष्ट द्वि० टीका निम्नलिखित है। पाठक महानुभाव उसे यथास्थान पढ़ने का प्रयास करें।

पुनरप्यात्मनि प्रवृत्तिं कारयति—

द्वि० टीका— स्वं स्वद्रव्यं विद्धि जानीहि किन्तु पुनस्तत्रापि स्वपर-वस्तूनि इमं अमुं व्यामोहं महास्नेहं छिन्धि विनाशय अनाकुलं निर्व्यग्रं यथा भवति तथा सुसंवेद्ये स्वसम्वेदनलक्षणे स्वरूपे स्वस्वरूपे केवले केवलज्ञानस्वभावे तिष्ठ स्थिरो भव, निर्व्याकुलत्वेनैव स्वरूपे स्थिरत्वं भवति नान्यथेति भावार्थः।